# लघु सप्तशती स्तोत्रम्

नमो विरिञ्चेर्वरवल्लभायै
नमोऽस्तु ते शङ्करवल्लभायै ।
नमोऽस्तु नारायणवल्लभायै
श्रीचण्डिकायै शरणं प्रपद्ये ॥

ब्रह्मादयो देवि भजन्ति देवा:
वसिष्ठमुख्या ऋषयश्च सर्वे ।
सिन्दूरवर्णां तरुणार्ककान्तिं
श्रीचण्डिके त्वां सततं स्मरामि ॥

श्रीसिद्धिनाथ भवतो भुवनैकभर्तु:
भाषा परामृतमयी निगमान्तरस्था ।
एषा त्वनन्यशरणस्य ममाश्रुतस्य
वृत्ता निसर्गकरुणावरुणालयस्था ॥

ॐ नमश्चण्डिकायै

यत्कर्म धर्मनिलयं प्रवदन्ति तज्ज्ञा
यज्ञादिकं तदखिलं सफलं त्वयैव ।
त्वं चेतना यत इति प्रविचार्य चित्ते
नित्यं त्वदीयचरणौ शरणं प्रपद्ये ॥ 1 ॥

पाथोऽधिनाथतनयापतिरेष शेष–
पर्यङ्कलालितवपु: पुरुष: पुराण: ।
त्वन्मोहपाशविवशो जगदंब सोऽपि
व्याघूर्णमाननयन: शयनं चकार ॥ 2 ॥

तत्कौतुकं जननि यस्य जनार्दनस्य
कर्णप्रसूतमलजौ मधुकैटभाख्यौ ।
तस्यापि यौ न भवत: सुलभौ निहन्तुं
त्वन्मायया कबलितौ विलयं गतौ तौ ॥ 3 ॥

यन्माहिषं वपुरपूर्वबलोपपन्नं
यन्नाकनायक पराक्रमजित्वरंच ।
यल्लोकशोकजननव्रतबद्धहार्दं
तल्लीययैव दलितं गिरिजे भवत्या ॥ 4 ॥

यो धूम्रलोचन इति प्रथित: पृथिव्यां
भस्मीभभूव समरे तव हुङ्कृतेन ।
सर्वासुरक्षयकृते गिरिराजकन्ये
मन्ये स्वमन्युदहने कृत एष होम: ॥ 5 ॥

केषामपि त्रिदशनायकपूर्वकाणां
जेतुं न जातु सुलभावपि चण्डमुण्डौ ।
तौ दुर्मदौ सपदि चांबरतुल्यमूर्ते
मातस्तवासिकुलिशात्पतितौ विशीर्षौ ॥ 6 ॥

दौत्येन ते शिव इति प्रथितप्रभावो
देवोऽपि दानवपते: सदनं जगाम ।
भूयोऽपि तस्य चरितं प्रथयाञ्चकार
सा त्वं प्रसीद शिवदूति विजृंभितं ते ॥ 7 ॥

चित्रं तदेतमरैरपि ये न जेया:
शस्त्राभिघातपतितादुधिरादपर्णे ।

भूमौ बभूवुरमिताः प्रतिरक्तबीजाः
तेऽपि त्वयैव गिलिता वदने समस्ताः ॥ 8 ॥

आश्चर्यमेतदखिलं यदभूत्सुरारी
त्रैलोक्यवैभवविलुण्ठनपुष्टपाणी ।
शस्त्रैर्निहत्य भुवि शुंभनिशुंभसंज्ञौ
नीतौ त्वया जननि तावपि नाकलोकम् ॥ 9 ॥

त्वत्तेजसि प्रलयकालहुताशनेऽस्मिन्
यस्मिन् प्रयान्ति विलयं भुवनानि सद्यः ।
तस्मिन् निपत्य शलभा इव दानवेन्द्रा
भस्मीभवन्ति हि भवानि किमत्र चित्रम्
॥ 10 ॥

तत् किं गृणामि भवतीं भवतीव्रताप–
निर्वापणप्रणयिनीं प्रणमज्जनेषु ।
तत् किं गृणामि भवतीं भवतीव्रताप–
संवर्धनप्रणयिनीं विमतस्थितेषु ॥ 11 ॥

वामे करे तदितरे च यथोपरिष्टात्
पात्रं सुधारसभृतं वरमातुलुङ्गम् ।
खेटं गदां च दधतीं भवतीं भवानीं
ध्यायन्ति येऽरुणनिभां कृतिनस्त एव ॥ 12 ॥

यद्वारुणात्परमिदं जगदंब यस्ते
बीजं स्मरेदनुदिनं दहनादिरूढम् ।
मायाङ्कितं तिलकितं तरुणेन्दुबिन्दु–
नादैरमन्दमिह राज्यमसौ भुनक्ति ॥ 13 ॥

अन्तः स्थिताप्यखिलजन्तुषु तन्तुरूपा
विद्योतसे बहिरिहाखिलविश्वरूपा ।
का भूरि शब्दरचना वचनातिगासि–
द्दीनं जनं जननि मामव निष्प्रपञ्चम् ॥ 14 ॥

आवाहनं यजनवर्णनमग्निहोत्रं
कर्मार्पणं त्वयि विसर्जनमत्र देवि ।
मोहान्मया कृतमिदं सकलापराधं
मातः क्षमस्व वरदे बहिरन्तरस्थे ॥ 15 ॥

एतत्पठेतनुदिनं दनुजान्तकारि
चण्डीचरित्रमतुलं भुवि यस्त्रिकालम् ।
श्रीमान् सुखी स विजयी सुभगः क्षमः स्यात्
त्यागी चिरन्तनवपुः कविचक्रवर्ती ॥ 16 ॥

श्रीसिद्धिनाथपरनामधेयः
श्रीशंभुनाथो भुवनैकनाथः ।
तस्य प्रसादात् सुलभागमश्रीः
पृथ्वीधरः स्तोत्रमिदं चकार ॥ 17 ॥

प्रथमा विष्णुमाया च द्वितीया चेतना तथा ।
बुद्धिर्निद्रा क्षुधा छाया शक्तिस्तृष्णास्तथाष्टमी
॥ 18 ॥

क्षान्तिर्जातिस्तथा लज्जा शान्तिः श्रद्धा च
कान्तिका ।
लक्ष्मीर्वृत्तिः स्मृतिश्चैव दया दीप्तिस्तथैव च
॥ 19 ॥

तुष्टिः पुष्टिस्तथा माता भ्रान्तिः सर्वात्मिका तथा ।
त्रयोविंशतिसंख्याता या देवी गणिता शुभा ।
भुक्तिर्मुक्तिर्नदूरस्था शुद्धपाठवतां नृणाम् ॥ 20 ॥

देव्याः स्तवं ज्ञानमयं कृतं यत्
पृथ्वीधराचार्यवरेण सम्यक् ।
यच्चोद्धृतं सप्तशतीस्थसारं
सर्वान्वितं तन्निगमस्य सारम् ॥ 21 ॥

॥ इति लघु सप्तशती स्तोत्रं संपूर्णम् ॥